प्रयान्ति परमं पदम् ॥५००॥ व्यास उवाच ॥ इत्युक्त्वा सा भगवती तत्रैवान्तरधीयत ॥ देवाश्च मुदिताः सर्वे देवीदर्शनतोऽभवन्५०१ ततो हिमालये जज्ञे देवी हैमवती तु सा ॥ या गौरीति प्रसिद्धाऽसीद्दत्ता सा शंकराय च ॥ ५०२ ॥ ततः स्कन्दः समुद्भूतस्तारक स्तेन पातितः ॥ समुद्रमन्थने पूर्वं रत्नान्यासुर्नराधिप ॥ ५०३ ॥ तत्र देवैः स्तुता देवी लक्ष्मीप्रीत्यर्थमादरात् ॥ तेषामनुग्रहार्थाय निर्गता तु रमा ततः ॥ ५०४ ॥ वैकुण्ठाय सुरैर्दत्ता तेन तस्य शमोऽभवत् ॥ इति ते कथितं राजन्देवीमाहात्म्यमुत्तमम् ॥ ५०५ ॥ गौरीलक्ष्म्योः समुद्भूतिविषयं सर्वकामदम् ॥ न वाच्यं ते तदन्यस्मै रहस्यं कथितं यतः ॥ ५०६ ॥ गीता रहस्यभूतेयं गोपनीया प्रयत्नतः ॥ सर्वमुक्तं समासेन यत्पृष्टं त्वयाऽनघ ॥ ५०७ ॥ पवित्रं पावनं दिव्यं किं भूयः श्रोतुमिच्छसि ॥ ५०८ ॥ इति श्रीदेवी गीतायां दशमोऽध्यायः ॥ १० ॥ इति श्रीहरिकृष्णविनिर्मिते बृहज्ज्योतिषार्णवे अष्टमे धर्मस्कन्धे तृतीये उपासनास्तवके अष्टाविंशत्युत्तरशततमे श्रीदुर्गोपासनाध्याये देवीभागवतसप्तमस्कन्धोक्तश्रीदेवीगीतानिरूपणं नामैकोनषष्टितमं प्रकरणम् ॥ ५९ ॥

अथ ग्रन्थालङ्कारः-वाराहीतन्त्रोक्तरवियामलतन्त्रोक्तएकादशविधपाठक्रमो ग्रन्थविस्तरभयान्नात्रोच्यते ॥ शेषग्रन्थे भविष्यति ॥ श्रीमद्वाजसनेयिगौतमकुलोत्पन्नोऽतिविद्यावतां मान्यो गुर्जरपण्डितोपपदकौदीच्यः सहस्राह्वकः ॥ ज्योतिःशास्त्रविशारदोऽतिमति मान् श्रीव्यङ्कटाख्यो द्विजस्तज्जोऽहं हरिकृष्णसंज्ञ इममाकार्षं विदां प्रीतये ॥ १ ॥ दक्षिणे सुमहाराष्ट्रदेशे च नगरं महत् ॥ औरङ्गाबादसंज्ञं वै तत्र चास्ति जनिर्मम ॥२॥ प्रार्थये सर्वविदुषां क्षमध्वं मेऽपराधकम् ॥ यद्यत्र कुकृतं वा स्यादधिकं यत्रकुत्रचित् ॥ ॥ ३ ॥ रागमुत्सृज्य तत्सर्वं निर्मलं कुरुतादरात् ॥ अत्रावशिष्टो यो भागः स तु शेषे भविष्यति ॥ ४ ॥ इति ग्रन्थालंकारप्रकरणं षष्टितमम् ॥ ६० ॥ इति श्रीमज्ज्योतिर्वित्कुलावतंसव्यंकटरामात्मजहरिकृष्णविनिर्मिते बृहज्ज्योतिषार्णवेऽष्टमे धर्मस्कन्धे तृतीये उपासनास्तवके श्रीदुर्गोपासनानिरूपणं नामाष्टाविंशत्युत्तरशततमोऽध्यायः ॥ १२८ ॥ अथाग्रे त्रिपुरभैरव्युपासना ॥

---

इदं पुस्तकं कल्याणनगर्यां श्रीकृष्णदासात्मजेन गङ्गाविष्णुश्रेष्ठिना स्वकीये
“ लक्ष्मीवेङ्कटेश्वर ” मुद्रणालये मुद्रयित्वा प्रकाशितम् ।

संवत् १९९५, शके १८६०.

मुद्रक और प्रकाशक-गङ्गाविष्णु श्रीकृष्णदास, मालिक- “ लक्ष्मीवेंकटेश्वर ” स्टीम्-प्रेस, कल्याण-बम्बई.



पुस्तक मिलनेका ठिकाना-

गङ्गाविष्णु श्रीकृष्णदास,
“ लक्ष्मीवेंकटेश्वर ” स्टीम्-प्रेस,
कल्याण-बंबई.

खेमराज श्रीकृष्णदास,
“ श्रीवेंकटेश्वर ” स्टीम्-प्रेस,
खेतवाडी-बंबई.

